त्रकार्यजनकत्वानुपपत्तेः, सहकार्यपेक्षायाः सत्त्वात् । तेषामेव कार्यकारणसहकारिणां काव्यनाट्योपनीतानामनुभावविभावव्यभिचारिभावत्वापन्नानामेकज्ञानविषयभूतानां नटकाव्यपाठकयो रामादिरूपत्वानुसन्धानात्तन्निष्ठत्वेन सामाजिकैः प्रतीतानां नटादिनिष्ठत्वेन रत्यादिप्रत्यायकत्वं, तन्निष्ठत्वेन प्रतीत एव च रत्यादी रसः । लोके मुखरागादिमति रत्याद्यनुमानदर्शनात् । तदनुकर्तरि नर्तकेऽपि तदनुगम इति निगर्वः । न चैवं रसस्य लौकिकत्वं स्यादिति वाच्यम् । काव्यनाट्यरूपोपनायकविशेषमाहिमापादितविभावत्वाद्यलौकिकावस्थाकारणादिना नर्तकादिगतत्वेन प्रत्यायितस्यैव तस्य रसत्वाङ्गीकारात् । एवमुपपत्तौ च चित्तवृत्तिविशेषरूपपदार्थान्तरत्वस्वीकारादरोऽपि गौरवापादकत्वादनुचितः ।

सामाजिकास्तु लिहते रसं पात्रं नटो मतः' । इत्युक्तेः ।

सामाजिकानामेव रसानुभावकत्वं नटस्य पात्रतैव । तथा च काव्यनाट्योपनीतानां कारणादीनां विभावादितामापन्नानां संयोगान्मिलनादेकज्ञानविषयतात्मनो हेतोर्लौकिकस्य रत्यादेर्निष्पत्तिरलौकिकरसरूपतया परिणाम इति सूत्रार्थ इत्याह ।

अत्रेदमालोचनीयम् । एवं सति रसस्य तुच्छत्वं स्यात् । नटे ऽसतामेव रत्यादीनां तत्त्वाङ्गीकारात् । वैज्ञानिकसत्त्वस्य च ज्ञानानतिरेकात् । किञ्च नटेऽसतामेव तेषां तन्निष्ठत्वेन प्रतीयमानानां रसत्वाङ्गीकारात् रसप्रतीतेर्भ्रमत्वप्रसङ्गः । न त्वस्य च प्रमात्वसंभवेऽनुचितत्वादिष्टापत्त्यसंभवः । किञ्चैवं सकलकाव्यनाटकादीनां भ्रमजनकत्वापत्तेरनुपादेयत्वापत्तिः । रसप्रतीतेर्भ्रमत्वात् ।

---

१ 'विशेषादिरूप' इति ख. पु. पाठः ।
४ रसस्य निष्पत्तिर्भवतीति इति ख. पु. पाठः ।

अपि चैवं नटे त्यादिरिति प्रतीतिर्न चमत्काररूपा रसप्रतीतिः स्यात्ताटस्थ्यादिति ।

यच्चात्र मते मिश्रप्रदीपकृत्परमानन्दचक्रवर्तिप्रभृभिरभिहितमपरं दूषणम्—'चित्तवृत्तीनामस्थिराणां परिपोषासंभवः । प्रत्युत लोके क्रोधशोकादीनामुत्तरोत्तरं ह्रास एव दृश्येत तेनानुकृतावपि तथात्वप्रसङ्गात् । किञ्च नटानामसर्वज्ञायोगिनां रामादिनियताव स्थानुकारासंभवः । तथा च कथं तद्गतरत्यादेस्तत्प्रतीतिः स्यात् । अपि च कल्पितविषयप्रकरणादौ वस्त्वभावात्कस्यानुकारः स्यात्' इति ।

तदयुक्तम् । अलौकिकविभावत्वाद्यवस्थाया अन्यत्राविनियोगात्तद्बलादेव काव्यनाटययो रत्यादेः परिपोषोपपत्तेः । अभ्यासपाटववतां नटानां रामायणाद्यवगतरामादिनियतावस्थानुकारसम्भवात्, सङ्गीतशास्त्रानुसारिप्रकारकृतावस्थानुकारस्यैव रत्याद्युद्बोधनसामर्थ्यात्, सकलावस्थानुकारानुपयोगाच्च । न चैवं किञ्चिदवस्थानुकारिण्यपि रत्याद्युद्बोधप्रसङ्ग इति वाच्यम् । सङ्गीतशास्त्रानुसार्यनुकारस्यैव तदुद्बोधनोपयोग इति निवेदितत्वात् । कल्पितविषयस्थलेऽपि तत्तद्दशान्याभिनयप्रकारेण तत्प्रबन्धवर्णनानुसारेण चाभिनयसम्भवात् ।

शङ्कुकस्तु — विभावादिभिर्नटे ऽनुमीयमानोऽनुकार्यगो रत्यादिः स्थायिभावो रसः । तथा हि — अस्ति तावन्नटे सामाजिकानां सम्यङ्मिथ्यासंशयसादृश्यप्रतीतिविलक्षणा 'रामोऽयम्' इति प्रतीतिः । न तावदियं यथार्था । नटे रामत्वाभावात् । नापि मिथ्या । बाधानवतारेण भ्रान्तिभावानवधारणात् । लोके बाधांशिरस्काया

---

१. 'अनुकार्यगत' इति ख. पु. पाठः । २. सामाजिकानामित्यारभ्य नटे रामत्वाभावात् इत्यन्तः पाठः ख पु. नास्ति ।

एव प्रतीतेर्भ्रमत्वप्रसिद्धेः । नटे रामत्वाभावस्य सामाजिकैरवगमाद्विशेषदर्शने सति भ्रमासम्भवाच्च । नापि संशयः । कोट्यन्तरानवभासात् । नापि सादृश्यप्रतीतिः । 'रामसदृशोऽयम्'इत्याकारानुल्लेखात् । तस्माद्विलक्षणैवेयं प्रतीतिः । तथा चोक्तम्—

प्रतिभाति न सन्देहो न तत्त्वं न विपर्ययः ।
धीरसावयमित्यस्ति नासावेवायमित्यपि ।
विरुद्धबुद्ध्यसम्भेदादविवेचितविप्लवः ।
युक्त्या पर्यनुयुज्येत स्फुरन्ननुभवः कया । इति ।

दृष्टा च बालानामीदृक् चित्रतुरगादिप्रतीतिरिति नाऽसांदृष्टिकताऽपि शङ्क्या । तथाऽवगते च नटे काव्यानुसन्धानचतुर्विधाभिनयसम्पादनपाटववशात्तेन प्रकाशितानि कार्यकारणसहकारीणि प्रतीतिगोचरीभूतान्युपनायकविशेषमाहात्म्याद्विभावादित्वमापन्नानि रत्यादीननुमापयन्ति । अनुसन्धानञ्च कविविवक्षितस्यार्थस्य वासनापाटववशात् साक्षादिव करणम् । तेन नटानामपि रसास्वादो नानुपपन्नः ।

तदुक्तम्—

काव्यार्थभावनास्वादो नर्तकेऽपि न वार्यते । इति ।

नन्वेवं कृत्रिमाणां तेषां व्याप्त्यभावात्कथमनुमापकत्वमिति चेन्न । उपस्थापकविशेषमाहिम्ना रत्यादिकार्यत्वेन ज्ञातेभ्यस्तेभ्योऽनुमानसंभवात् । धूमत्वेन ज्ञाताद् धूलीपटलादग्न्यनुमानवत् । नचवं लोके मुखरागादिना रामादावनुमितस्य रत्यादे रसत्वं स्यादिति वाच्यम् । विभावादित्वेन ज्ञातेभ्य एव तेभ्यो रत्याद्यनुमानोपगमात् । लोके च तत्त्वानभ्युपगमात् । तदुक्तम् -

नानुमितो हेत्वाद्यैः स्वदते ऽनुमितो यथा विभावाद्यैः । इति ।

हेतोरलौकिकत्वादत्रैवोत्पद्यते चमत्कार इत्यर्थः ।

लोके पुलकादिना रत्याद्यनुमानदर्शनादत्राप्यनुमानम् । अन्यथा तदभ्यासपाठत्रापेक्षणमदृष्टार्थं स्यात् । तथा च लोकवदेवात्राप्युपपत्तौ पदार्थान्तरकल्पनागौरवमनादरणीयम् । ननु नटे रत्यादीनां बाधात्कथमनुमानमिति चेत् । मैवं वोचः । रामत्वेन नटप्रतीतेर्बाधानवतारात् । नन्वेवमनुमिते पुनरनुमानायोगाद्रसस्य क्षणिकत्वं स्यादनुमीयमानस्यैव रत्यादे रसत्वोपगमादिति चेत् । अनभिज्ञोऽसि । अनुमितस्यापि तन्मयीभावापादकधीरूपवासनावशात्पुनः पुनरनुसन्धाने दोषाभावात् । इयमेव ह्यस्मिंन्यमते चर्वणा । यत्पुनः पुनरनुसन्धानं नाम तेनैव रसस्य चर्वणीयत्वव्यवहारोऽपि ।

यद्वा लोकेऽनुमितस्य पुनर्नानुमानम् । सिद्धेः प्रतिबन्धकत्वात् । काव्यनाट्ययोस्तु सामाजिकान तन्मयीभावादनुमित्सा तत्कालमेव भवतीति सिषाधयिषयाऽनुमाने न दोषः । रत्यादीनां सुखरूपत्वादितरानुमेयवैलक्षण्यम् रसस्य च निरतिशयानन्दरूपत्वात् लौकिकसुखनु मानवैलक्षण्यं ध्येयम् । तथा च कारणादिभिरेव विभावादितामापन्नैः संयोगात् सम्यग् योगात् व्याप्यव्यापकभावलक्षणात्सम्बन्धात् स्थायिभावस्य नटनिष्ठत्वेनानुमितिगोचरस्य रसत्वेन निष्पत्तिर्निश्चयापत्तिः पुनः पुनरनुसन्धानमिति सूत्रार्थ इति प्रावोचत् ।

अत्रेदमवधारणीयम् । किं रसोऽनुमीयते ? अनुमीयमानो वा रसः ? नाद्यः । रसप्रतिबद्धलिङ्गाभावात् । प्रतीत्या रूढस्य रसत्वोपगमाच्च । नाऽन्त्यः । लोकेऽपि रसत्वप्रसङ्गात् साध्याभेदात् । न च लोके विभावत्वादिज्ञानाभावान्न तथेति वाच्यम् । अप्रयोजकत्वात् । यथाहुराचार्याः— असतोऽपि यस्य रसत्वं

(१) 'अस्मन्मते' 'इति' ख. पु. पाठः ।

तस्य वस्तुसतः कथं न स्यादिति। अपि च रामपक्षकं नटपक्षकं वाऽनुमानं, आत्मपक्षकन्तु न संभवत्येव। विभावादीनां नटनिष्ठत्वात्। व्याप्तिपक्षधर्मतोपेतस्यैव लिङ्गत्वात्। आद्यकल्पद्वये च ताटस्थ्यादरस्यतापत्तिः। किञ्च विभावत्वादीनामलौकिकत्वात्तत्पुरस्कारेण व्याप्तिग्रहक्षेत्राभावात् कारणादिरूपेणानुमानं वाच्यम्, तच्च तदानीं निवर्त्तत इति वक्ष्यते। तथाज्ञानमेव तत्र तन्त्रमिति चेत्, न। सहभानविरोधात्। व्याप्तिपक्षधर्मताज्ञानव्यवधानात्। तत्रापि लिङ्गोपहितो लिङ्गी भासत एवेति चेत्, सत्यम्। किन्तु तत्रोभयोरेकत्र भानम्, इह तु गुणप्रधानभावेन पानकरसन्यायोपगमादिति।

अन्ये तु नटे रत्याद्यनुमानस्य रसत्वे तदप्रामाण्यं स्यात्। तत्रापि प्रीतिव्युत्पत्त्योरविशेष इति चेन्न। अप्रमात्वव्याकोपात्। स्मृतिवत्स्वांशे प्रमात्वेऽपि धर्मिणि सर्वमभ्रान्तमिति न्यायादिति चेन्न। प्रमात्वस्योपपादयिष्यमाणत्वात्। अथ रत्याद्यनुमानानन्तरं रसोद्बोधस्तर्हि तत्र तेषामभावे रसोपाधिता न स्यात्। 'अनुपहितस्य रसत्वे स्थायिभावा रसत्वमाप्नुवन्ति' इति भरतवाक्यविरोधः स्थायिनिरूपणानुपयोगो विभागानुपपत्तिश्चेत्याहुः।

वयन्तु अनुमीयमानस्य रसत्वे 'रसं साक्षात्करोमि' इत्यनुव्यवसायानुपपत्तिः। न च स भ्रमः। वक्ष्यमाणप्रकारेण प्रमात्वोपपत्तौ भ्रमत्वस्यानुचितत्वात्। परोक्षप्रतीतिगोचरत्वे रसस्य चमत्कारानुपपत्तिश्चेति ब्रूमः।

भट्टनायकस्तु—भावनोपनीतो रामादिरत्यादिः सामाजिकचिदानन्दाख्यसाक्षात्कारविषयो रसः। तथा हि—न तावद्रस

(१) 'रसत्वेन' इति ख. पु. पाठः।

त्पद्यते। उत्पत्तिर्हि रामादिनिष्ठत्वेन नटनिष्ठत्वेन स्वनिष्ठत्वेन वा? नाद्यः। रामादीनामसन्निहितत्वात्। न द्वितीयः। नटे रत्यादीनामनुपलब्धिबाधात्। नापि तार्तीयीकः। सीतादीनां सामाजिकरतावकारणत्वात् स्वकान्तात्वसंवेदनाभावात्। [१]आराध्यत्वज्ञानस्य प्रतिबन्धकत्वाच्च। नापि प्रतीयते। प्रतीतिरपि हि न रामादिनिष्ठत्वेन न नटनिष्ठत्वेन संभवति। ताटस्थ्येन प्रतीतस्यास्वादायोगात्, नात्मगतत्वेन। स हि रामादिरत्यादीनामात्मरत्यादीनामेव वा? नाद्यः। भ्रमत्वप्रसङ्गात्। आस्वादस्य च प्रमात्वाव्यभिचारात्। न द्वितीयः। सीतादीनां तदप्रत्यायकत्वात्। तथात्वे कामिताप्रसङ्गेन पापित्वप्रसङ्गाच्च। नाप्यभिव्यज्यते। अभिव्यक्तेः प्रतीत्यनतिरेकेण तत्पक्षोक्तदूषणगणग्रासात्। रसस्य प्रागसिद्धेरभिव्यक्त्ययोगाच्च। पूर्वसिद्धमेव हि घटादि प्रदीपादिनाऽभिव्यज्यते। अन्यथाऽकार्यत्वापत्तेः।

किञ्च व्यङ्ग्यव्यञ्जकयोः सहप्रतीतिरभिव्यक्तिः। पुस्तकचित्रादौ तथादृष्टेः। न च रसस्थले तथासम्भवः। विभावादिरसप्रतीत्योः कार्यकारणभावेन सहभावासम्भवात्। क्रमस्वीकाराच्च। तस्मादन्यैव भोगरूपा रसप्रतीतिरभ्युपेया।

तथा हि—

त्रयस्तावत्काव्यव्यापाराः। अभिधा भावना भोगश्चेति। तत्र काव्यार्थपर्यन्ताऽभिधा। रत्यादिविषया भावना। सहृदयविषयश्च भोग इति। भावना च विभावादिसाधारणीकरणात्मा भावकत्वाख्यः कश्चन वासनापरनामा संस्कारः। तेन च रामादिरत्यादिभिः सह सामाजिकरत्यादीनामभेदाध्यवसानम्।

(१) 'आराध्यत्वज्ञानस्य इत्यारभ्य नटनिष्ठत्वेन संभवति, इत्यन्तः पाठो नोपलभ्यते ख. पुस्तके।

तेन रामादिरत्यादीनां सामाजिकं प्रति बाह्यत्वेन मानससाक्षात्काराख्यभोगानुपपत्तिरित्यपास्तम् । कामिनीं भावयतस्तत्साक्षात्कारवदुपपत्तेः। भावकत्वञ्च समुचितगुणालङ्कारपरिग्रहात्मकम् । अतएव कृताधिगमो लौकिकः शब्दो नोपयुज्यते, उपयुज्यते तु काव्यशब्दः । दृश्यते हि तदेव काव्यं मुहुर्मुहुश्चर्वयन् सहृदयो लोकैः । अतएव[2] काव्यतदर्थपरामर्शाहृतचेतसां भेदो न प्रतिभासत इति युक्तम् ।

तदुक्तम्—

स्वादः काव्यार्थसम्भेदाद्रत्यानन्दसमुद्भवः । इति ।

भावनासन्निहितस्य रत्यादेः साक्षात्कारोपपत्तौ न यत्नान्तरगौरवमास्थेयमिति परमार्थः । ननु रामादिरत्यादीनामनधिगतानां भावना न सम्भवति । तस्याः प्रतीतिसन्तानतज्जनितसंस्कारान्यतररूपत्वादिति चेन्न । व्यञ्जनयैव तत्सम्भवात् । न चैवं सैवास्तु किं भोगेनेति वाच्यम् । भोगौन्मुख्येन तत्र विश्रामासम्भवात्, भावनोपक्षीणत्वाच्च । तस्माद्रजस्तमसी अभिभूयाऽऽविर्भूतात्मीत्यात्मकात्प्रकाशफलकात्साङ्ख्याभिमताद् गुणविशेषान्निराविले[3] चेतसि भावनोपनीतो रत्यादिः स्वप्रकाशानन्दमयविभावादिसाधारण्यावभासहेतुकसकलविघ्नविनिर्मुक्तचमत्काराभिनिवेशरसनास्वादनभोगविश्रान्त्यादिविलक्षणव्यपदेश्य[4]साक्षात्कारविषयो रस इति पर्यवसितोऽर्थः ।

भोगपर्यन्तञ्च काव्यशब्दोऽपि व्याप्रियते, वेदान्तिनामात्मसाक्षात्कारवदिति । तथा च विभावादिभिः सह संयोगाद्भाव्यभाव-

(१) 'सामाजिकान्' इति ख. पु. पाठः । (२) 'एव' इति ख. पुस्तके नास्ति । (३) 'गुणविशेषात' इत्यतः 'विभावादिसाधारण्यावभासहेतुक' इत्यन्तः पाठः ख. पुस्तके नास्ति । (४) 'व्यपदेश व्यपदेश्य' इति पाठः ख. पुस्तके । (५) 'भाव्यभावकसम्बन्धाद्रत्यादेः' इति ख पुस्तके नास्ति ।

कसम्बन्धाद्रत्यादेः भाव्यमानस्य रसस्य सतो रसो यथा भवति तथा निष्पत्तिः पर्यवसानं विश्रान्तिर्भोगो भवतीति सूत्रार्थः। भुज्यमानो रस इति यावदिति प्रबभाण ।

अत्रेदं विमर्शनीयम् । किं रामादिनिष्ठो रत्यादिर्भोग्यतामापन्नो रसः, उत सामाजिकनिष्ठः। नाद्यः । अप्रमात्वापातात् । किञ्च न तावाद्भवनानन्तरं भोगः । सन्निधापकाभावेन भोगायोगात् । भावनास्थितिकालावच्छेदेनैव भोग इति चेत् । सत्यम् । किन्तु भावना चर्वणोच्यते तदारूढस्यारसत्वे अलं भोगेन । अपि च रामादिरत्यादीनां अननुभूतानां न भावनासम्भवः । तस्याश्चिन्तासन्तानरूपत्वात् ।

यत्तु व्यञ्जनया काव्यादेवाऽनुभव इत्युक्तम्, तदयुक्तम् । तथा सति भोगाऽनुपयोगात् । भोगौन्मुख्येन तत्र विश्रान्त्यसम्भव इति चेत्, न । तत्रैव विश्रान्तेरभिधातुं शक्यत्वेनाप्रयोजकत्वात् । नापि द्वितीयः । सामाजिकरत्यादीनां शब्दाननुपादानेन भावनासम्भवादनुपनीतानां भावनानुपपत्तेः । सीतादीनां सामाजिकरत्यादिविभावत्वाद्यभावेन व्यञ्जनाया अप्यसम्भवात् । तदङ्गीकारे तु सैवाऽऽवर्त्तमाना भावना भवतु न परा । अथ भोग एव तत्पदेऽभिषिच्यते, तर्हि भोगोऽपि व्यञ्जनेति पर्यायः स्यादाश्रयतः फलतश्च तयोरविशेषात् । किञ्च सहृदयहृदयेषु वासनात्मनां रत्यादीनां सततसन्निहितत्वादलमतिरिक्तया भावनया । वासनैव भावनेति चेत्, तर्हि तज्जन्या प्रतीतिरेव भोग इति सिद्धान्तपक्षादविशेषात् न विवादः। यथाहुराचार्याः- प्रतीतिव्यतिरिक्तः संसारे को भोग इति न पक्षभेदः सिद्धान्तादिति ।

अभिनवगुप्ताचार्यश्रीचरणास्तु—विभावानुभावव्यभिचारिव्यपदेश्यैः कारणकार्यसहकारिभिर्ललनोद्यानादिकटाक्षभुजोत्क्षेपादिचिन्तादिभिः सम्बन्धिविशेषस्वीकारपरिहारानवसायात् साधारण्येन प्रतीतैरभिव्यक्तो दध्यादिवद्रूपान्तरेण परिणतिमुपनीतो न तु घटः प्रदीपेनेव पूर्वसिद्धः प्रकाशितो वासनात्मतया सामाजिकानां मनसि निलीनो ज्ञानविषयोऽपि ज्ञानाकारः सखण्डोऽप्यखण्डः प्रत्यङ्गममृतमिव सिञ्चन् सकलं विश्वं स्वविलसितमिवोपदर्शयन् विभावाद्यनधीनमपि तदधीनमिव विभावादिसमयसमनियतमात्मानमादर्शयन् स्वप्नविषय इव मनोगम्योऽपि बाह्यविषयवदितरेन्द्रियविषयमिव स्वात्मानं परिस्फोरयन् हृदयमिव प्रविशन् परिमितो ऽप्यपरिमितः सहृदयचर्वणैकमाणपरमात्मसाक्षात्कारानन्दसुन्दरो ऽकार्योऽपि कार्यो ऽज्ञेयोऽपि ज्ञेयः रसश्रृङ्गारादिपदावाच्योऽपि लौकिकालौकिकरससाधारण्येन तत्पदवाच्यो निर्विकल्पकसविकल्पकागोचरोऽपि तद्गोचरत्वव्यवहारगोचरो ऽनिर्वचनीयरूपः सत्त्वोद्रेकसंस्कृतहृदयेन सहृदयेन प्राक्तनाऽनेकतनुभिरर्जितभूयःसुकृतसम्भारसम्भूताऽनादिवासनाप्रबोधभाजा[1] प्रमात्रा[2] साधारण्येन गोचरीकृतोऽप्यसाधारणतया पानकरसन्यायेन चर्व्यमाणः सन्ततधारापन्नाऽनुच्छेद्यप्रवाहापन्नो लौकिकोऽप्यलौकिकचमत्कारकारी रत्यादी रस इति तत्त्वमुपदर्शयामासुः।

ननु कारणत्वादिपरिहारेण विभावत्वादिस्वीकारे किं मानमिति चेन्न। प्रामाणिकव्यवहारस्यैव मानत्वात्। तस्य निरालम्बनत्वाऽसम्भवात्। अलौकिकवासनात्मकरत्यादिनिरूपितकारणत्वा-

( १ 'पदं' इति ख. पुस्तकेऽधिकम् । (२) 'मात्रा' पदं ख. पुस्तकेऽधिकम्।
( ३ ) 'चर्वणैकप्राणः' इति पृथक् पदं ख. पुस्तके ।

द्यसम्भवाच्च । विभावनादिव्यापारस्यावश्यकत्वाच्च । अन्यथा रसप्रतीतिलक्षणालौकिककार्यानिर्वाहात् । तेषां च विभावादीनां साधारण्येन प्रतीतावनुभव एव प्रमाणमित्यावेदितं सम्बन्धविशेषत्यादिना । तेन सामाजिकरत्याद्यभिव्यक्तौ रामादिरत्याद्यभिव्यक्तिकारणेभ्यः सीतादिभ्योऽनुपपन्नेति परास्तम् । सीतात्वादिमपहाय स्त्रीत्वादिमात्रेणैव स्फुरणात् । अवस्थाविशेषार्थमेव तथोपादानात् ।

तदाह धनञ्जयः—

धीरोदात्ताद्यवस्थानां रामाद्याः प्रतिपादकाः ।
विभावयन्ति रत्यादीन् स्वदन्ते रसिकस्य ते ॥ इति ।

वस्तुतस्तु स्त्रीत्वादिकमपि न स्फुरति । लोक एव तदपेक्षणात् । नन्वयुक्तमेतत्, पदार्थतावच्छेदकरूपेणैव पदार्थप्रत्ययौचित्यादिति चेन्न । दोषाभावगुणालङ्कारमाहिम्ना चर्वणाख्यायामुत्तरप्रतीतौ तथानवगमाविरोधात् । अन्यथा काव्यनाट्येभ्यो हिताहितव्युत्पत्तिरपि न स्यात् । तत्रापि हि तत्तदाचरणं तत्तादिष्टानिष्टसाधनमिति रामादिसम्बन्धमपुरस्कृत्य मानसधीरुदेति । न हि वाक्यार्थबोधो रसोऽपि तु तदभ्युपायः । दृश्यते हि मृन्मयान् द्विरदान्पश्यतो डिम्भस्य मृन्मयादित्वं विशेषमपहाय द्विरदसामान्यप्रतिभासः । तथा च तत्तद्विशेषापुरस्कारेण धीरोदात्तादिसामान्यप्रतिभासो न विरुद्धः ।

तदुक्तं धानिकेन—

क्रीडतां मृन्मयैर्यद्वद्बालानां द्विरदादिभिः ।
उत्साहः स्वदते तद्वत् श्रोतृणामर्जुनादिभिः । इति मिश्राः ।

---

( १ ) 'मानसी' इति पृथक् पदं ख. पुस्तके ।

अत्रेदं चिन्त्यम्। स्त्रीत्वादिभानमावश्यकमेव, उत्तरप्रतीतावपि पदार्थप्रत्ययानुसारस्यैवोचितत्वात् हिताहितव्युत्पत्तावपि स्त्रीत्वादिभानस्याविरोधित्वात् । प्रत्युतोपयोगाच्च । यस्मात्सीतादिभिरेवमाचरितं रामादिभिरेवमाचरितं, तस्मादन्यस्त्रीभिरपि सीतादिवदेवाचरितव्यं, अन्यपुंभिरपि रामादिवदेवाचरितव्यमिति स्त्रीपुंस्त्वाद्युपग्रहेणैव हि मानसधीरुदेति । यश्च द्विरदादिप्रतिभासदृष्टान्तः, स तु विपरीतः । द्विरदत्वादिप्रतिभासस्य तत्रापि भावात् । तस्माद्विभावत्वादिप्रकारेण भानमेव साधारण्येन भानम् । स्त्रीत्वादिभानं पुनरास्तां नवेत्यन्यदेतदिति वयम् ।

अभिव्यक्त एव च रत्यादिरसो, न तु घटप्रदीपन्यायेन पूर्वसिद्धो रसोऽभिव्यज्यते । 'रसोऽभिव्यज्यते' इति व्यवहारस्तु स्थाय्यभिव्यक्त्युपचारात् ।

तदुक्तं लोचनकारैः—

रसाः प्रतीयन्त इति ओदनं पचतीतिवद्व्यवहार इति । अभिव्यक्तिश्च समूहालम्बनात्मिका गुणभूते रत्यादिभिः सहैव प्रतीतिः । व्यङ्ग्यव्यञ्जकभावस्तु घटचाक्षुषप्रत्यक्षे विषयालोकयोरिव सहप्रतीतावपि नानुपपन्नः ।

ननु प्रागसिद्धः कथमभिव्यज्यत इति चेन्न । वासनात्मतयाऽनुवर्त्तमानत्वात्। अतएव वासनाया अभावाद्वैयाकरणश्रोत्रियजरन्मीमांसकादीनां रङ्गस्थितानामपि न रसास्वादः ।

---

( १ ) 'तथा रामादिष्वपि' ख. पुस्तकेऽधिकः पाठः । ( २ ) 'जनुरर्जित' इति ख. पु. पाठः । ( ३ ) 'अलौकिकवासनात्मके' त्यादितः 'विभावनादिव्यापारस्यावश्यकत्वाच्च । अन्यथा' इत्यन्तः पाठो नास्ति ख. पुस्तके । ( ४ ) 'सम्बन्धिविशेष' इति ख. पु. पाठः । ( ५ ) 'सीताद्वित्वे' इति ख. पु. पाठः । ( ६ ) 'विशेषावगमार्थं' इति ख. पु. पाठः । ( ७ ) 'मानसी' इति पृथक् पदं ख. पुस्तके । (८) भानमिति ख. पुस्तके नास्ति ।

तदुक्तं धर्मदत्तेन—

सवासनानां सभ्यानां रसस्यास्वादनं भवेत् ।

निर्वासनास्तु रङ्गान्तः काष्ठलोष्ठाश्मसन्निभाः । इति ।

अतएव च शान्तानां न श्रृङ्गाररसास्वादः,[२] गाढरागाणाञ्च न शान्तरसास्वाद इत्यादि व्यवस्था । तत्तद्वासनायास्तत्तदास्वादप्रयोजकत्वात् ।

वासना चेदानीन्तनी प्राक्तनी च द्विविधाऽप्यास्वादहेतुः । तत्र यद्याद्या न स्यात् रागिणामपि केषां चिदास्वादादर्शनमनुपपन्नं स्यात् । द्वितीया चेन्न स्यात् श्रोत्रियादीनामपि रसास्वादः स्यादित्यावेदितमेवेति साम्प्रदायिकाः ।

वयन्तु—प्राक्तनी वासना तावदावश्यक्येव, यां विना व्युत्पन्नानामपि न रसास्वादः । सैव च प्रतिभा, काव्यकारणमपि सैव । इदानीन्तनवासनाकल्पनायान्तु प्रमाणाभावः ।

यत्तूच्यते रागिणामपि केषाञ्चिदास्वादानुदयः किञ्चिद्विलम्बकृत इति—तत्रोच्यते व्युत्पत्तेरपि सहकारित्वात्तद्विलम्बकृत इति । तथा च पूर्ववासनाव्युत्पत्तिसमाजादेव काव्यार्थसम्भेदे रसास्वाद इति । यत्तु मुहुर्मुहुः काव्यपरामर्शेन तन्मयीभावे भावकत्वाऽपरनामा संस्कारएवेदानीन्तनी वासना, स चाऽऽवश्यक एवेति तत्र नाऽस्माकं प्रद्वेषः । अनुभवदार्ढ्यात् संस्कारदार्ढ्यमनुसन्धानधाराधायकं कोवा नाऽङ्गीकुरुते, साधारण्येनैव तस्य हेतुत्वग्रहात् । प्रागुक्तवासनेव तु प्रतिभाऽपरनामधेया विलक्षणा काचिदियमपीत्यत्रपरममर्षः । संस्कारमात्रस्वाऽङ्गीकारे तु सुहृदेवाऽसि न इति ब्रूमः । वासनावशादेव विभावादिसाधारण्यभानं, वासनायां च पूर्वसुकृतसम्भारएव हेतुः ।

(१) 'च' इति ख. पुस्तके नास्ति । (२) 'श्रृङ्गारास्वाद' इति पाठः ख. पुस्तके । (३) 'किंचिद्विलम्बकृत' इति ख. पु. पाठः ।

तदुक्तं—

पुण्यवन्तः प्रमिण्वन्ति योगिवद्रससन्ततिम् । इति ।

नन्वलौकिकानां समुद्रलङ्घनादीनां कदाऽप्यननुभूतत्वाद्वासनाया असम्भवे कथं साधारण्याऽभिमान इति चेन्न । संसारस्याऽनादित्वात्कदाचिदनुभवसम्भवात् । तदावश्यकत्वे तत्राऽपि तत्कल्पनात् । किञ्चोत्साहादिषु नाजानिकः कश्चिद्विशेषः । किन्तु विषय विशेषकृतः । ततश्च काव्यनाट्ययोर्विशेषास्फुरणान्नानुपपत्तिः । ननु कारणादीनामेव यथासङ्ख्यं विभावादित्वात्कथं तेषां रसाभिव्यक्तौ कारणत्वमेवोच्यत इति चेत्, सत्यम् । काव्यनाट्योपनीताऽलौकिकविभावत्वादिरूपाणां तथाभावसम्भवात् । कार्योन्नेयधर्माणां यथाकार्यमुन्नयनात् । कथं तर्हि सर्वेषां सहप्रतीतिः, तत्प्रतीतेः रसप्रतीतिहेतुत्वेन यौगपद्यासम्भवादिति चेत्, सत्यम् । प्रथमं प्रत्येकमेव प्रतीतानां चर्वणाख्योत्तरप्रतीतौ सहभानाविरोधात् । पानकरसे मधुरादिरसप्रतीतिवत् । तदुक्तम्—

यथा बहुद्रव्ययुतैर्व्यञ्जनैर्बहुभिर्युतम् ।
आस्वादयन्ति भुञ्जाना भोज्यं भुक्तविदो जनाः ।
भावाभिनयसम्बद्धान् स्थायिभावांस्तथा बुधाः ।
आस्वादयन्ति मनसा तस्मान्नाट्ये रसाः स्मृताः । इति ।

केवलस्य रसादेरास्वादे चमत्काराभावात् नन्वेवं रसस्याखण्डत्वात् राद्धान्तव्याकोपापत्तिरिति चेन्न । विभावादीनां तटस्थानामेव विशेषकत्वात् । प्रथममेकैकशः प्रतीता एव हि रत्यादयस्तद्विभावादयश्च सर्वेऽप्येकीभूताश्चर्वणाख्यायामुत्तरप्रतीतौ स्फुरन्त एव रसतामापद्यन्त इति रसप्रतीतेः स्वप्रकाशत्वादेव नाखण्डत्वहानिः ।

स च रसो न कार्यः। विभावादिसमूहालम्बनात्मकत्वात्। कार्यत्वे तदनुपपत्तेः। न हि कारणज्ञानं कार्यज्ञानञ्च युगपद् दृश्यते। नाऽपि नित्यः। पूर्वमप्रतीतेः। वासनारूपत्वेन स्थित्युपगमेऽपि रसत्वेन पूर्वस्थित्यनभ्युपगमात्। नाऽपि भविष्यत्। साक्षादानन्दमयप्रकाशरूपत्वात्। नाऽपि वर्त्तमानः। कार्यज्ञाप्यविलक्षणस्वभावत्वात्। किञ्च न तावदस्य निर्विकल्पकं ग्राहकं सम्भवति। विभावादिपरामर्शप्रधानत्वात्। परानन्दमयत्वाच्च। तस्य च निर्विकल्पकेनाऽग्रहणात्[1]। नाऽपि सविकल्पकम्। अभिलापाद्ययोग्यत्वात्। सविकल्पकवेद्यानां हि वचनप्रयोगादियोग्यता। न चास्य तथात्वम्। किञ्च विशेषणज्ञानजन्यं हि सविकल्पकम्। विशेषणञ्चात्र चर्वणा, तस्याश्च ज्ञानदशां विना वैशिष्ट्यान्तराभावेन कस्य ग्रहणं स्यात्। विशिष्टस्य ग्राह्यस्याभावात्[2]। न च ज्ञानविकल्पे 'घटं जानामि' इत्यादावाकारत्रयभानवद्भवितेति वाच्यम्। स्वरूपमात्रभानाङ्गीकारात्। नाऽपि रसः परोक्षः। साक्षात्करोमीत्यनुव्यवसायात्। मनोग्राह्यत्वसम्भवात्तदभ्युपगमाच्च। नाऽप्यपरोक्षः, काव्यरूपशब्दान्वयव्यतिरेकानुविधानात्। तस्मान्न ज्ञाप्यः। किञ्च विभावादेः पूर्वं पश्चाद्वा प्रतीत्यभावाद्विभावादिप्रवणप्रतीतिघटितमूर्तिकत्वान्न ज्ञाप्यत्वम्। यदि च रत्यादिरूपे स्थितस्य रसरूपतया प्रकाश उच्यते, तदा न मतभेदः। न च रसव्यञ्जनाऽपि न स्यादिति साम्प्रतम्। इष्टापत्तेः। रसाधिष्ठानरत्यादिव्यञ्जनायामेव रसव्यञ्जनात्वोपचारात्। अलक्ष्यक्रमध्वनिव्यवहारस्याऽपि तन्निबन्धनत्वात्। रसस्य तु चर्वणाविषयतैव। ननु रसस्याऽकार्यत्वे भरतसूत्रे निष्पत्तिपदमनुपपन्नमिति

(१) 'निर्विकल्पकग्रहणासम्भवात्' इति ख. पु. पाठः। (२) 'ग्राह्यत्वाभावात्' इति ख. पु. पाठः।

चेन्न। चर्वणाया जन्यत्वेन तत्र जन्यत्वोपचारात्। यदि च केवलाद्विशेषणाद्विशेष्याच्च विशिष्टो भिन्न एव रस इति विशिष्टपदार्थान्तरवादिमतानुरीत्योच्यते, तदा ज्ञप्तिनिष्पत्ती मुख्ये अपि वक्तुं शक्येते। घट उत्पद्यते ज्ञायते इतिवत्। यदि तु रसनं रस इति विभावादिगोचरा चर्वणैव रसः।

यदाहुः—आस्वादात्मानुभवो रस इति।

शार्ङ्गदेवोऽपि—

सुखरूपा स्वसंवेद्या संविदास्वादनाऽभिधा।
रसः स्यादथ वा स्थायी रसस्तद्गोचरीभवन्। इति।

तदाऽनुपपत्तिरेव नाऽस्ति। पक्षत्रयेऽपि चर्वणानिष्पत्तिरस्त्येवेति परमार्थः। केवलं विभावादीनां रसव्यवहारोपाधित्वमित्याभिप्रायेणोपचारप्रवादः।

यत्तु प्रदीपकृत्साहित्यदर्पणकारादिभिरभिहितम्—यद्यपि रसाऽनन्यतया चर्वणाऽपि न कार्या, तथाऽपि कादाचित्कतया तत्कार्यतामुपचर्य तदेकात्मन्यनादिवासनापरिणतिरूपे रत्यादिभावेऽपि तथा व्यवहार इति। तन्न चारुतरम्। क्षणिकस्य भावस्याऽकार्यत्वस्य सर्वतन्त्रविरुद्धत्वात्। न च रसाऽनन्यचर्वणाकार्यत्वे रसस्यैव कार्यत्वं स्यादिति वाच्यम्। भेदाभेदवादिमतानुसारेणोपपन्नत्वात्। सिद्धान्तप्रवादस्तु चर्वणोत्पत्तेः पृथग्विशिष्टोत्पत्तिर्नास्तीत्येतत्परत्वेन समर्थित एव। रसस्य च स्वप्रकाशानन्दमयसंवेदनगोचरत्वमनुभवसिद्धमिति कृतं तत्र प्रमाणान्तरगवेषणायासेन। स्वप्रकाशानन्दमयत्वे ज्ञानस्य विप्रतिपन्नास्तु वेदान्तिभिरेव दण्डनीयाः।

---

(१) 'मतानुगत्या' इति ख. पु. पाठः। (२) वादि पदं ख. पुस्तके नास्ति।

तस्मादिदमत्र तत्त्वम्, विरुद्धरूपसम्भेदात्परिदृष्टाननुसारि-विलक्षणानिर्वचनीयरूपो रसः। प्रमाणञ्चात्र चर्वणैवेति।

ननु हेतुत्वं कारकज्ञापकान्यतरत्वव्याप्तम्। तच्च विभावादिज्ञानान्निवर्त्तमानं स्वव्याप्यं हेतुत्वमपि निवर्तयतीति चेत्, न। अनुभवसिद्धस्याऽन्यत्राऽदृष्टिमात्रेणाऽपलापाऽशक्तेः। पानकरसस्याऽप्यपलापप्रसङ्गात्।

तथा चाहुः—

केदमन्यत्र दृत्वष्टमहो निपुणता तव।

दृष्टान्तं याचसे यत्त्वं प्रत्यक्षेऽप्यनुमानवत्। इति।

तस्मादनन्यथासिद्धानुभवबलादप्रसिद्धमेव प्रकारान्तरमादाय हेतुत्वं पर्यवस्यतीति बोध्यम्। एतेन यदाधुनिकेनाऽऽलङ्कारिकम्मन्येन गङ्गाधरेणोक्तम्-उत्पत्तिज्ञप्तिभिन्नचर्वणानुपपत्ते रसस्य धीसमुल्लासमात्रतया तुच्छत्वप्रसङ्गः, तथा च सत्यर्थक्रियाकारित्वं न स्यात्। तस्माच्चर्वणाप्रतिबन्धतिरोधानद्वारेण शास्त्रस्य ब्रह्मणीवाभिव्यञ्जकत्वं रसविभावादीनाम्। तथा च विभावादिपरामर्शे न चर्वणा। आवरणविघाते स्वसंवेदनीयसुखरूपरसप्रतिबिम्बोद्ग्रहणसमर्था चर्वणावृत्तिरुत्पद्यते इति चर्वणाद्वारा विभावादीनां कार्यो ज्ञाप्यश्च रस इति वदामः।

एतेन सविकल्पकनिर्विकल्पकाभ्यां रसग्रहणे दोषात्परस्परप्रतिक्षेपे परस्परात्मकत्वतदभावात्मकत्वाऽन्यतरापत्त्या ग्राहकविधावपि रसस्य लोकोत्तरतेत्यपि निरस्तम्। उक्तयुक्त्या सविकल्पकेनैव रसग्रहणसम्भवात्। न चैवं रस एव विषयविशेषस्फूर्तिप्रसङ्गः। निर्विषये रसे विषयेणाकारासमर्पणात्। वैषयिके तु सुखे विषयेणाऽऽकारसमर्पणाद्विषयस्फूर्तिरिति।

तदिदमविवेचितसिद्धान्ततत्त्वस्याभिधानमिति ध्येयम्। एवं सति लोकोत्तरत्वहानिप्रसङ्गात्। चर्वणापदार्थानिरूपणाच्च।

किञ्च चर्वणाया रसाऽनन्यतया तद्द्वारा कार्यत्वज्ञाप्यत्वाधानं हृदयशून्यतामेवाऽऽवेदयति द्वारद्वारिभावस्य भेदगर्भत्वात् । अपि च चर्वणायाः कार्यत्वज्ञाप्यत्वानङ्गीकारात्कथमन्यत्वेऽपि तद्द्वारा कार्यत्वज्ञाप्यत्वे अभिधातुं शक्येते । तस्यास्तत्त्वाङ्गीकारे त्वस्मत्कक्षानिक्षेपापत्तिः । रसस्य तद्द्वारा कार्यत्वज्ञाप्यत्वोपपादनानुपयोगश्च । तत्कार्यत्वज्ञाप्यत्वाभ्यामेव व्यवहारसिद्धेः । भेदाभेदयोः सर्वमतेऽप्यावश्यकत्वात् । तस्माच्चर्वणाद्वारा रसः कार्यो ज्ञाप्यश्चेति प्रलापमात्रम् । सविकल्पकग्रहणं तु निरस्तमेव । विस्तरेण चैतन्मतमलङ्काररहस्ये निरस्तमस्माभिरित्युपरम्यते ।

वयं तु—न कारणादीनामेव विभावादित्वं, नाऽपि रत्यादीनामेव रसत्वं, किन्तु काव्यनाट्योपनीतकारणादिपरामर्शवशात्तन्मयीभावेन ये सामाजिकहृदयदर्पणे प्रातिबिम्बन्यायेन तदाकारसुन्दराश्चित्तवृत्तिविशेषा जायन्ते अत एव विभावत्वादिकमलौकिकं रूपं भजन्ते, तदनु च सकलाकारसुन्दरा काचिदेका विलक्षणा चित्तवृत्तिर्जायते इति स्थायी रसतो न भिद्यते । अतएव भरतसूत्रे स्थायिपदानुपादानम् । आत्मीयाया अन्यदीयाया वा लौकिक्याश्चित्तवृत्तेर्ज्ञाने हि रसस्य लौकिकत्वापत्तिरेव । सैव च स्वप्रकाशानन्दमयी चर्वणा च । तस्यां चाऽखण्डत्वमपि सुलभमेव । अकार्यत्वादिप्रवादस्त्वन्यकार्यज्ञाप्यवैलक्षण्यादिनिबन्धनः सम्प्रदायमतवदेवेति सिद्धान्ततत्त्वमालोचयामः ।

अत्रेमा मामिकाः सङ्ग्रहकारिकाः—

विभावत्वानुभावत्वसञ्चारित्वाद्युपागतैः ।
उपनायकमाहात्म्यात्कारणत्वादिवर्जितैः ॥

---

(१) 'तद्द्वारा इत्यारभ्य रसस्य' इत्यंशो नास्ति ख. पुस्तके । (२) कार्यत्वाभ्यामेव च—इति. ख.पु. पा. ।

केवलं स्थाय्यभिव्यक्तौ हेतुत्वेनैव संमतैः ।
वासनावशतः सत्त्वसमुद्रेकान्निराविले ॥
वासनात्मतया पूर्वं सामाजिकहृदि स्थितः ।
साधारणतया भातैः कारणादिभिरेव यः ॥
रत्यादिर्व्यज्यते स्थायी रसः सोऽस्मन्मते मतः ।
वासनोद्बोधकं चाऽत्र काव्यनाट्याऽनुभावनम् ।
सोऽयं रसः स्वप्रकाशसुखात्मकाधिया यया ।
गृह्यते चर्वणा सैव कार्या सैव च संमता ॥
विभावा अनुभावाश्च सञ्चारिस्थायिनौ तथा ।
गुणप्रधानभावेन चर्व्यमाणा रसात्मताम् ॥
यान्ति पानकवत्तेन प्रमाणमिह सा मता ।
विरुद्धरूपसम्भेदादैकरूप्यं परानुदत् ॥
अलौकिकः परब्रह्मसंवेदनसहोदरः ।
रसोऽयमिह संवित्तेरन्यन्मानमपार्थकम् ॥
वस्तुतस्तु न रत्यादी रसत्वं कारणादि च ।
विभावत्वादितामेति किं तु तन्मयभावतः ॥
सामाजिकानां जायन्ते ये तदाकारसुन्दराः ।
चित्तवृत्तिविशेषास्ते विभावत्वाद्यलौकिकम् ॥
रूपं भजन्ते तदनु सकलाकारसुन्दरा ।
एका विलक्षणा चित्तवृत्तिर्या जायते सताम् ॥
रसनात्मा रसः सैव शङ्काशूकनिवारिता ।
इति ब्रूमो वयं त्वत्र तदिदं मत्सरं विना ॥
विचारणीयं रसिकैरिति सर्वं समञ्जसम् ।
इदं सिद्धान्तसर्वस्वमलङ्काररहस्यके ॥

विस्तरेण मया सम्यग् विवेचितमनुक्रमात् ।
तत एवाऽवगन्तव्यमित्यलं बहुवल्गनैः ॥

स्थायिलक्षणं तु—

विरुद्धैरविरुद्धैर्वा भावैर्विच्छिद्यते न यः ।
आत्मभावं नयत्यन्यान्स स्थायी लवणाकरः । इति धनिकेनोक्तम् ।

ते च—

रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा ।
जुगुप्सा विस्मयश्चेति स्थायिभावाः प्रकीर्तिताः ।
इति नाट्ये ऽष्टौ ।
त एव शमसंयुक्ताः काव्ये स्युः स्थायिसंज्ञिताः ।

इति काव्ये नवेति विवेचितं मया अलङ्काररहस्ये । एतेषां च विरोधाऽविरोधचिन्ता विरोधस्थले गङ्गाधरेणोक्तं चित्ररसनिराकरणं च तत्रैव द्रष्टव्यम् ।

रसाश्च—

शृङ्गारहास्यकरुणरौद्रवीरभयानकाः ।
बीभत्साद्भुतसंज्ञौ चेत्यष्टौ नाट्ये रसाः स्मृताः ।

इति नाट्येऽष्टौ । शान्तोऽपि नवमो रसः इति नव काव्ये । एते विभावानुभावसञ्चारिभिर्मिलितैरेवाऽभिव्यज्यन्त इति । यत्रैकैकसद्भावेपि लघु समाक्षेपोऽन्यस्य तत्र न व्यभिचार इति न दोषः । यत्र तु न झटित्याक्षेपस्तत्र रसदोष एवेत्याद्यमलङ्काररहस्ये विपञ्चितम् ।

(१) बहुजल्पनैः—इति ख. पु. पाठः ।

यत्तु

रसे सारश्चमत्कारः सर्वत्राऽप्यनुभूयते ।
तच्चमत्कारसारत्वे सर्वत्राऽप्यद्भुतो रसः ।
अतस्त्वद्भुतमेवाह कृती नारायणो रसम् ।

इति नारायणेनाऽद्भुत एव रस इत्यभिहितम् । धर्मदत्तादिभिश्च तदेवानुसृतम् । तन्न साधु । वैलक्षण्यस्याऽनुभवसिद्धत्वात् । प्रकृतिभेदाच्च । नाऽपि व्यभिचारिषु स्थायिन इव रत्यादिषु विस्मयानुगमः । शोकादिषु तथाऽननुभवात् । लौकिके रसे नियमतस्तद्विभावादेरनुपनिपातात् काव्यादौ च तथानुपनिबन्धात् ।

अथ प्रतीयते तावत्सर्वत्र चमत्कारः सचाद्भुत एव, तस्यैव रत्यादिविभावानुरोधेन व्यपदेशान्तरमिति । तत्र तर्हि विस्मयानुरोधेनोऽद्भुतव्यपदेश इत्यपि सुवचत्वात् । अन्यथा तदिभिरहिणामपि तदास्वादप्रसङ्गात् ।

अथ पृथगेवाऽयमद्भुतः सर्वैरेव रसभेदाभिमतैर्जन्येत, जन्यतां स तु न रसः । किन्तु तद्धेतुः स्थायी अलौकिकमत्कारीत्यभियुक्तव्यवहारात् । तस्य तथापरिभाषणे तु नाऽस्माकमपचयो न युष्माकमुपचय इति संक्षेपः । विस्तरस्तु मदुन्नीताऽलङ्काररहस्ये ध्येयः । एतेषां प्रत्येकमुदाहरणादि च तत्रैव द्रष्टव्यमिति शिवम् ।

इति श्रीमद्विन्दुवृन्दारकवृन्दपुन्दर जगद्गुरु महामहोपाध्याय
भट्टमाधवतनूजनि प्रभाकरोन्नीते रसप्रदीपे
रसविवेको नाम द्वितीयालोकः समाप्तः ॥

---

१ विस्मयानुरोधेऽद्भुतव्यपदेशः—इति ख, पु, पाठः ।

एवं रसं निरूप्य रसः कया वृत्त्या काव्यात्प्रतीयत इत्यपेक्षायां वृत्त्यन्तरनिरासेन व्यञ्जनां स्थापयितुं तृतीयालोक आरभ्यते—तत्र रसस्तावत्काव्यात्प्रतीयत इति सकलसहृदयानुभवसिद्धम् । अतस्तत्र वृत्तिरङ्गीकार्या । वृत्त्यैव शब्दस्य प्रत्यायकत्वात् अन्यथाऽतिप्रसङ्गात् । तत्र न तावद्रसादिबोधने ऽभिधा व्याप्रियते, तत्र सङ्केताभावात् । किञ्च विभावादिवाचकपदानां विभावादिमात्रशक्तत्वात् पदान्तरस्य चाऽभावात्केन रसाद्यभिधानं स्यात् । न हि विभावाद्यभिधानमेव तदभिधानं, रसस्य तदैकरूप्यानभ्युपगमात् । प्रत्युत स्वपदाभिधाने रसदोषाङ्गीकार इति । यत्राऽपि 'शृङ्गारस्योपनतमधुना राज्यमेकातपत्रम्' इत्यादौ शृङ्गारादिपदोपादानं, तत्राऽपि विभावादिभ्य एवाऽऽस्वादरूपा रसप्रतीतिर्न तु रसशृङ्गारादिपदात् इति न तेनाऽप्यभिधानशङ्का ।

अभिहितान्वयवादिभिरभिमता तात्पर्याख्याऽपि वृत्तिः संसर्ग[1]बोधमात्रोपक्षीणा न व्यङ्ग्यप्रत्या[2]यने व्यापारत्वमासादयति । यत्तु कैश्चिदुक्तं 'सोऽयमिषोरिव दीर्घदीर्घो व्यापारः' इति । यच्चाऽन्यैरप्यभिहितम् ।

तात्पर्याव्यतिरेकाच्च व्यञ्जकत्वस्य न ध्वनिः ।
यावत्कार्यप्रसारित्वात् तात्पर्यं न तुलाधृतम् ॥ इति

तत् द्वयमप्ययुक्तं, शब्दबुद्धिकर्मणां विरम्य व्यापाराऽसम्भवात् । किञ्चैवं लक्षणाऽपि नाऽङ्गीकार्या स्यात् । दीर्घदीर्घाभिधाव्यापारेणैव तीरादिप्रतीतिसिद्धेः । अपि च ब्राह्मण ! पुत्रस्ते जातः, कन्या ते गर्भिणी' इत्यादौ हर्षशोकभयादीनामपि वाच्यत्वापत्तिः, दीर्घदीर्घाभिधा[3]व्यापारस्य तावदपि प्रसारसम्भवात् ।

---

१ 'बोध'—इति क. पु० नास्ति । २ प्रापणे—इति ख. पु. पाठः ।
३ 'दीर्घदीर्घाभिधे' त्यारभ्य 'दूरभ्रष्टं भवे'दित्यन्तो ग्रन्थः ख. पु. नास्ति ।

किञ्चैवं 'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्' इति भवत्सिद्धान्तसर्वस्वमप्येवं दूरभ्रष्टं भवेत्। दीर्घदीर्घाभिधाव्यापारेणैव प्रत्यायकत्वे श्रुतेरेव सर्वत्र बोधकत्वसम्भवात्। तुल्यबलत्वस्यैव युक्तत्वात्।

यत्तु कैश्चिदुच्यते 'पौरुषेयमपौरुषेयं वा सर्वं वाक्यं कार्यपरमेव, अतत्परत्वेऽनुपादेयत्वादुन्मत्तवाक्यवदुपेक्षणीयत्वापत्तेः'। ततश्च काव्यशब्दानामपि निरतिशयानन्दास्वादव्यतिरेकेण प्रतिपाद्यप्रतिपादकयोः प्रयोजनान्तरानुपलब्धेर्निरतिशयसुखास्वाद एव तत्कार्यत्वेनाऽवधार्यते तत्र च शब्दव्यापार आवश्यकः, 'यत्परः शब्दः स शब्दार्थः' इति न्यायादिति। तत्र प्रष्टव्यं किमिदं तत्परत्वम्, तदर्थत्वं वा तात्पर्यवृत्त्या तद्बोधकत्वं वा? आद्ये न विवादः। व्यङ्ग्यत्वेऽपि तदर्थतानपायात्। द्वितीये तु केयं तात्पर्याख्या वृत्तिः? अभिहितान्वयवादिभिरङ्गीकृता तदन्या वा? आद्ये दत्तमेवोत्तरम्। द्वितीये त्वतिरिक्तवृत्त्यङ्गीकारान्नाममात्रे विवादे पर्यवसानम्।

ननु युगपदेव तात्पर्यशक्त्या विभावादिसंसर्गात्मकस्य रसादेः प्रकाशनं भवत्विति चेन्न। तयोर्हेतुफलभावाङ्गीकारात्। सहभावे च सव्येतरविषाणवत्तदसम्भवात्। किञ्च बोद्धादिभेदादपि व्यङ्ग्यबोधनेऽभिधा न व्याप्रियते। तथा हि-वाच्योऽर्थः सङ्केतज्ञानमात्रशालिभिरवगम्यते व्यङ्ग्यस्तु सहृदयैरेवेति बोद्धृभेदः। 'भम धम्मिअ' इत्यादौ विधिनिषेधरूपतया, 'निःशेषच्युत' इत्यादौ च निषेधविधिरूपतया स्वरूपभेदः। 'गतोऽस्तमर्कः' इत्यादौ च वाच्यार्थ एक एव, व्यङ्ग्यस्तु तत्तत्प्रतिपत्रादिभेदात् कान्तमभिसरेति, गावो निरुध्यन्तामिति, नायकस्याऽयमागमनावसर इति,

सन्तापोऽधुना नास्तीति, विक्रेयवस्तूनि संह्रियन्तामिति, अग्निहोत्रहोमादिकमनुष्ठीयतामिति, दूरं मागा इत्यादिरनवधिरवभासत इति सङ्ख्याभेदः। वाच्यार्थः शब्दोच्चारणमात्रात् प्रतीयते व्यङ्ग्यस्तु तथाविधप्रतिभादिनैर्मल्यादिनेति निमित्तभेदः। वाच्यस्त्वचमत्कारी, व्यङ्ग्यस्तु प्रतीतमात्रश्चमत्कारकारीति कार्यभेदः। वाच्यः केवलप्रतीतिको, व्यङ्ग्यस्तु चमत्कारिप्रतीतिक इति प्रतीतिभेदः, पूर्वपश्चाद्भावेन च कालभेदः, वाच्यः शब्दाश्रयः, व्यङ्ग्यस्तु पदतदेकदेशतदर्थवाक्यतदर्थवर्णतद्गतसौकुमार्यकाठिन्यादिविशेषरचनाद्याश्रय इत्याश्रयभेदः।

कस्स व ण होइ रोसो दट्ठूण पिआइ सव्वणं अहरं।
सभमरपडमग्घाइणि वारिअवामे सहसु एण्हिं॥

इत्यादौ च सखीतत्कान्तादिगतत्वेन विषयभेदः। तस्मान्नात्राऽभिधा। रसनात्मकव्यापारभिन्नरसादिपदप्रतिपाद्यप्रमाणान्तरसिद्धरसाभावाच्च न तत्राऽभिधा। प्राक् सिद्धमेव हि घटादिकमभिधया बोध्यते। अत एव न लक्षणाऽपि व्यङ्ग्यबोधनक्षमा। मुख्यार्थबाधादित्रयाभावाच्च।

न हि 'शून्यं वासगृहं विलोक्य' इत्यादौ मुख्यार्थबाधः। न च तद्योगः। परम्परासम्बद्धस्याऽपि व्यङ्ग्यत्वात्। नापि प्रयोजनं, रसस्यैव परमप्रयोजनत्वात्। 'गङ्गायां घोषः' इत्यादौ च प्रयोजनस्याऽपि लक्ष्यत्वेऽनवस्थाप्रसङ्गात्। न च तद्विशिष्टे लक्षणा, विषयप्रयोजनयोर्युगपत्प्रतीत्यनभ्युपगमात्। नीलादिसंवेदनानन्तरमेव हि ज्ञाततायाः अनुव्यवसायस्य वा सम्भवः।

ननु 'शून्यं वासगृहम्' इत्यादावभ्युपगम्यते तावद्विभावादिवाचकपदानां रसप्रतीतौ तात्पर्यम्, अन्यथा निष्प्रयोजनत्वात्[1]।

१ निष्प्रयोजनत्वप्रसङ्गात्। इति. ख. पु. पाठः।

तन्निर्वाहश्च लक्षणया । तथा हि—चुम्बनालिङ्गनादिचेष्टानां रत्यादिभिः सहाऽविनाभावो दृष्टः, ते च चुम्बनादयः काव्येऽभिधीयमाना रत्यादिकं लक्षयन्ति 'अभिधेयाविनाभूतप्रवृत्तिर्लक्षणोच्यते' इति वचनात् । लक्षितश्च रत्यादिर्वाक्यार्थः । प्राधान्येन बोध्यत्वात् । यथाह धनिकः—

वाच्या प्रकरणादिभ्यो बुद्धिस्था वा यथा क्रिया ।
वाक्यार्थः कारकैर्युक्तः स्थायीभावस्तथेतरैः ॥ इति ।

इतरैर्विभावादिभिः । लक्षणानभिमानस्तु मुख्यार्थानवधारणात् । किञ्चाऽस्ति मुख्यान्वयसम्भवेऽपि लक्षणा 'यष्टीः प्रवेशय' इत्यादौ प्रकरणादिना यष्टिमत्प्रवेशतात्पर्ये निर्णीते तदनुपपत्त्या सेति चेत् इतोऽपि दीयतां दृष्टिः । प्रमाणान्तरावधृतरसप्रत्यायनतात्पर्यानुपपत्त्या विभावादिवाचकपदानां तत्र लक्षणेति सुवचत्वात् ।

अथोच्यते–लक्षणा तावत् द्विविधा, अर्थान्तरसङ्क्रमितवाच्या अत्यन्ततिरस्कृतवाच्या च । तत्र न तावदाद्या, यत्र हि मुख्यार्थः स्वेन रूपेणाऽनुपयोगबाधितो रूपान्तरेणाऽन्वेति तत्रार्थान्तरसङ्क्रमः । यथा 'रामोऽस्मि सर्वं सहे' इति । अत्र हि रामत्वमात्रमेवाकाङ्क्षितं वक्तृत्वेनैव तल्लाभात् । अतो राज्यपरित्यागवनवासादिधर्मसहस्रविशिष्टो धर्मी लक्ष्यते, धर्माश्च प्रत्येकमनन्तत्वात् लक्षयितुमशक्याः । न चाऽत्र विभावादयोऽनुपयुक्ताः, नाऽपि रूपान्तरेण गम्यन्तेऽपि तु स्वरूपेणेति कथमर्थान्तरसङ्क्रमः स्यात् । न वा विभावादयो न प्रतीयन्ते रसाप्रतीतिप्रसङ्गात् । तस्यास्तत्समूहालम्बनरूपत्वात् । अतो नाऽत्यन्ततिरस्कृतवाच्यता । अतो न लक्षणा इति ।



तन्न । 'गङ्गायां घोषः' इत्यादौ मुख्यत्यागेन लाक्षणिकप्रयोगे प्रयोजनाऽन्वेषणाया अयुक्तत्वात् । अत्र तु क्वापि न मुख्यप्रयोगः इति किमनयेति चेत्, अत्रोच्यते—यत्तावदुक्तं विभावादिवाचकपदैःस्वार्थाविनाभूतत्वात् लक्षितो रत्यादिर्वाक्यार्थइति, तदयुक्तम् । विभावादिवाचकपदानां स्वार्थाबाधाद्रत्यादिलक्षकपदाभावात्, अपदार्थस्य चावाक्यार्थत्वात् ।

यदप्यत्रोक्तं मुख्यार्थान्वयेऽपि तात्पर्यानुपपत्त्या 'यष्टीः' इत्यादौ लक्षणा दृष्टेति, तत्रोच्यते—न तावद्विभावादिसंसृष्टो रत्यादिर्लक्ष्यते संसर्गस्य लक्षणाफलत्वात् । यथाऽऽहुः—

वाच्यस्यार्थस्य वाक्यार्थे सम्बन्धाऽनुपपत्तितः ।
तत्सम्बन्धवशप्राप्तस्यान्वयाल्लक्षणोच्यते ॥ इति ।

अथ केवलो रत्यादिर्लक्ष्यते, तत्र तल्लक्षकपदाभावात् । अथ वाक्यार्थ एवाऽपर्यवसितस्तमाक्षिपति अत एवापदार्थस्थानीयतेति । तर्हि न पुनरन्वयः, तस्यैव रसत्वेन प्रतीतिविश्रामधामत्वात् । यदप्यभिहितमायुष्मता—'अत्र क्वचिदपि मुख्यप्रयोगाभावात् किं प्रयोजनान्वेषणयेति । तन्न । तस्यैव विवादपदत्वात् । अथ मुख्यप्रयोगे चमत्काराभावेन रसदोषप्रसङ्गान्न मुख्यप्रयोगाभावस्य विवादपदता इति, तदपि न । एवं हि रूढिलक्षणा स्यात् तथा च सर्वेषां रसप्रतीतिप्रसङ्गः ।

वस्तुतस्तु मुख्यार्थबाधादिहेतुत्रयाभावेऽपि जायमाना वृत्तिस्तदितरैव भवितुमर्हति मात्सर्यमात्रात्तु भवद्भिर्लक्षणोच्यते इति ।

ननु भवत्वनुमानं रसप्रत्यायकम् । तथा हि–विभावानुभावव्यभिचारिप्रतीतिस्तावद्रसप्रतीतेः साधनमिष्यते । ते हि कार्यकारणसहकारिभूता रत्यादीननुमापयन्त एव रसं निष्पादयन्ति । एवं

हि प्रतीयमाना आस्वादपदवीमुपेतास्ते रसा इत्युच्यन्ते इत्यवश्यंभावी तत्प्रतीतिक्रमः । केवलमाशुभावितयाऽसौ न लक्ष्यते यतोऽयमद्याप्यनभिव्यक्तक्रमः इति व्यक्तिविवेककारः ।

अत्रोच्यते—किं शब्दाभिनयसमर्पितविभावादिप्रत्ययानुमितरागादिज्ञानमेव रसत्वेनाभिमतं, उत तद्भावनया भावकैर्भाव्यमानः स्वप्रकाशानन्दो वा ? आद्ये नो विवादः । किं तु रामादिरागादिप्रतीतिर्न रसत्वेनाभ्युपगम्यतेऽस्माभिः । द्वितीयस्तु व्याप्तिग्रहणाभावाद्धेतोराभासतया च नानुमानगम्यः ।

ननु यत्र यत्र विभावाद्यभिधानं तदभिनयो वा, तत्र तत्र शृङ्गारादिरसाविर्भावः, इति सुग्रहैव व्याप्तिः पक्षधर्मता च । अथोच्येत अनुमाने हेतुमात्रापेक्षा अत्र तु वक्त्रादिवैशिष्ट्यमपेक्ष्यताम् 'न ह्यतिपृथुलं जलकुम्भ'मित्यादौ कुलवधूक्तार्थविशेषावगमः । न वा वक्त्रादिवैशिष्ट्यावगमे प्रतिभावतां व्याप्त्याद्यनुसन्धानावलम्बेन प्रतीतिर्व्यङ्ग्यस्य विलम्बः (?) इति, तत्र अनुमानपक्षेऽपि हेतूपस्थितौ तदुपयोगात् । विशिष्टस्यैव लिङ्गत्वात् । पदात्तथानुपस्थितिरिति चेत् न । प्रमाणान्तरावगतस्यापि विशेषस्य धूमादाविवापेक्षितत्वात् । अत एवाहुः—

याऽर्थान्तराभिव्यक्तौ वः सामग्रीष्टा निबन्धनम् ।
सैवानुमानपक्षे नो गमकत्वेन संमता ॥ इति ।

किञ्च अभिधामूलव्यङ्ग्येऽभिधयैव व्यङ्ग्यप्रतीतिसिद्धेर्निरर्थिका वृत्त्यन्तरकल्पना । न च प्रकरणादिनैकार्थे तन्नियन्त्रणान्न तत्र तस्या व्यापार इति वाच्यम् । तात्पर्यस्यावश्यकत्वात् । अन्यथा तादृशकाव्यार्थे कवीनां पदविशेषणान्वेषणं न स्यात् । न च 'युगपद्बोधकत्वं सकृदुच्चरितस्य ने'तिनियमान्नार्थद्वयस्य युगपत्प्रतीतिः ।

प्रतीतिक्रमे तु विरम्य व्यापार इति वाच्यम् । सकृदुच्चरितादपि सति तात्पर्ये युगपदनेकार्थबोधसंभवात् । अत एव ध्वनिकृता—

भद्रात्मनो दुरधिरोहतनोर्विशाल-
वंशोन्नतेः कृतशिलीमुखसङ्ग्रहस्य ।
यस्यानुपप्लुतगतेः परवारणस्य
दानाम्बुसेकसुभगः सततं करोऽभूत् ॥

इत्यादिश्लोकः श्लेषोदाहरणत्वेन दर्शितः । ननु सत्यप्यनेकार्थबोधनसामर्थ्येऽक्षादिपदे प्रकरणादिनियमवदत्रापि तथा स्यादिति चेत्, न । तात्पर्यस्यावश्यकत्वादित्यादिपूर्वेणैव दत्तोत्तरत्वात् । भवतु चाऽभिधाया अबोधकत्वमिह, तथाप्येकपदवाच्यत्वसम्बन्धेन लक्षणानुमानं वा भवेत् । न त्वदृष्टचरवृत्तिकल्पना । अपि च

भम धम्मिअ वीसद्धो सो सुणओ अज्ज मारिओ तेण ।
गोलाणईकच्छकुंडगवासिणा दरिअसीहेण ।

इत्यादौ, 'उल्लास्य कालकरवालमहाम्बुवाह'मित्यादौ च सर्वत्र वाच्यादसम्बद्धं तावन्न प्रतीयते . ततश्च बोधकोऽर्थो लिङ्गं, बोध्योऽर्थश्च लिङ्गी । बोधकस्य चार्थस्य पक्षसत्त्वं तावन्निबद्धमेव । सपक्षसत्त्वविपक्षव्यावृत्तत्वे अनिबद्धे अपि सामर्थ्यादवसीयेते इति त्रिरूपाल्लिङ्गाल्लिङ्गिज्ञानमनुमानमेव व्यङ्ग्यार्थबोधकमिति नातिरिक्तवृत्तिकल्पने मानम् ।

अत्र वदामः—यत्तावदभिहितं यत्र यत्र विभावादयोऽभिधीयन्ते तत्र तत्र रसप्रतीतिरिति सुग्रहैव व्याप्तिः पक्षधर्मता चेति, तन्न नो विरुद्धम् । न ह्येवंविधा प्रतीतिरास्वादत्वेनाऽस्माकमभिमता । किं तु स्वप्रकाशमात्रविश्रान्तः परमान्द्रानन्दनिर्भरः । तेनात्र सिषाधयिषितादर्थादर्थान्तरस्य साधनादाभासता हेतोः ।

यच्चोक्तं-'याऽर्थान्तराभिव्यक्तौ वः सामग्रीष्टा निबन्धनम्'। इत्यादि तदप्ययुक्तम्। विभावादिभिः सह प्रतीतेरनुमानाऽसम्भवाच्च। यथाऽऽह धनिकः–स्वरूपं प्रकाशयन्नेव परावभासनो व्यञ्जक इत्यादि, ज्ञातस्यार्थस्य व्यञ्जकत्वात्कथमेवमिति चेत्, न, व्यङ्ग्यज्ञानकाले व्यञ्जकज्ञानानुवर्त्तनात्। अत्र सम्बन्धज्ञानापेक्षणात्। न चातिप्रसङ्गः, प्रतिभाजुषामेव तदुदयात्। नन्वत्रापि न सहप्रतीतिरव्यवधाना वासनादिवशात्तु तथा भ्रम इति चेत्, न, बाधकमन्तरेण तत्कल्पनायोगात्। तदुक्तं वाचस्पतिमिश्रैः।

प्रीयमानपरित्यागो बाधके नाऽसति स्फुटः। इति।

नन्वदृष्टचरवृत्तिकल्पनागौरवमेव बाधकम्। तदुक्तं तैरेव— दृष्टात्कार्योपपत्तौ च नाऽदृष्टपरिकल्पनेति चेत्सहप्रतीतिबलेन तत्कल्प्यते फलमुखत्वाद्गौरवस्य। किंचाऽनुमितावेवगौरवम्, असंविदित व्याप्त्यादिकल्पनात्। सम्बन्धस्य बोधकत्वं तावल्लक्षणास्थलेऽभिमतमेवेतीहाऽपि स एवाज्ञातो बोधयतीति लाघवम्। न च तत्कल्पकमपि, फलस्यान्यथासिद्धेः। अपि चाऽनुमानं परार्थमेव स्यात्। शब्दरूपत्वात्। तत्र च साध्यसाधननिर्देशनियमः। न चात्र तथा साध्यानुपादानात्। यद्यप्यभिधामूलव्यङ्ग्यस्थलेऽभिधैवेतरार्थबोधनक्षमेति प्रोक्तं तदप्ययुक्तम्। तस्याः प्रकरणादिनियन्त्रितत्वात्। यच्चोक्तमपरार्थेऽपि तात्पर्यमावश्यकमपरथा पदविशेषान्वेषणमफलं स्यादिति, तत्रोच्यते-क्रमिकार्थबोध एव तात्पर्यात् युगपद्बोधस्तावदनुपपन्नः। क्रमे तु विरम्य व्यापार प्रसङ्गः। यद्वाऽभिहितमभिधाया अभावेऽपि लक्षणानुमानं वा स्यादिति तदनुपपन्नम्। मुख्यार्थबाधाद्यभावात्। तात्पर्यानुपपत्तिरस्त्यैवेति चेत, मैवम्। तदज्ञानेपि सहृदयानामपरार्थबोधात्।

किञ्च द्वितीयार्थे यद्यप्यभिधालक्षणे तथापि तदुपमालंकारप्रतीतये ऽवश्यं स्वीकार्यम्। वृत्त्यन्तरादेव तत्प्रतीतिसिद्धौ किमदृष्टचराभिधालक्षणाप्रकारकल्पनया। तस्मान्न लक्षणेति। अनुमानं तु पूर्ववदेव निरस्तम्।

यदप्यपरमुक्तमसम्बद्धं तावन्न प्रतीयत इत्यनुमानस्यैव सर्वत्र व्यङ्ग्यावगमक्षमत्त्वान्नातिरिक्तवृत्तिकल्पनमिति, तदेतदपेशलम्। हेतूनामाभासत्वात्।

तथा हि—'भम धम्मिअ' इत्यादौ गृहे श्वनिवृत्त्या विहितं भ्रमणं गोदावरीतीरे सिंहोपलब्धेर्भीरुभ्रमणाभावमनुमापयतीति वक्तव्यं, तत्राऽनैकान्तिको हेतुः। भीरोरपि गुर्वाद्यादेशेन प्रियानुरागादिना वा गमनसम्भवात्। पुंश्चलीवचनं प्रामाणिकं नवेति सन्देहात्सन्दिग्धासिद्धश्च। 'उल्लास्य काले'त्यादौ यः कालः स नीरदतुल्य इति व्याप्त्यभावः सर्वत्राभावात्। 'एवंविधोर्थ एवंविधार्थबोधकः एवंविधार्थत्वात् यन्नैवं तन्नैव'मित्यप्याभासमानयोगक्षेममनुमानम्। किञ्चैवंविधत्वस्याननुगतत्वात् प्रत्येकमेव व्याप्तिर्वाच्या। तत्र च स्थले स्थले आभासतोक्तैव। यत्रापि 'दृष्टिं हे प्रतिवेशिनी'त्यादौ न ग्रन्थिस्तनलिखनमेकाकितया स्रोतोगमनं च तस्याः परकामुकोपभोगस्य लिङ्गमिति भासते तदत्रैवाभिहितेन पतिस्नेहेनापि भवतीत्यनैकान्तिकम्। 'निःशेषच्युतचन्दन'मित्यादावपि चात्रैव स्नानकार्यत्वेनोपात्तानां चन्दनच्यवनादीनामुपभोगानैकान्त्यात्तदनुमापकत्वं न सम्भवति।

किञ्च प्रतिपाद्यदूत्यादेस्तदनुमानं सहृदयानां वा ?। नाऽऽद्यः। तत्प्रतीतेरसत्त्वाभावात्। न द्वितीयोऽपि। तथाविधाभिप्रायस्थगनस्थले व्यभिचारात्। विशिष्टहेतुत्वस्य चाधस्तान्निरासात्। किञ्चैवंविधानां कविप्रतिभामात्रजन्मनां काव्यानां

प्रामाण्यानावश्यकत्वात्सर्वत्र संदिग्धासिद्धत्वं हेतोः। व्यक्तिवादिना ऽधमपदसहायानामेवैषां व्यञ्जकत्वमुक्तम् ।

न च तत्कान्तस्य अधमत्वं प्रामाणिकमिति निश्चयस्तत्कथमनुमानम् ? न चास्त्वनुमानाभासः, आभासताज्ञाने तदनुदयात् । सहृदयानामिहाभासता न स्फुरत्येवेति नियम इति चेत्, न। नियमस्य वाङ्मात्रत्वात् । वस्तुतस्तु व्याप्त्याद्यनुसन्धाननियमाभावान्नाऽनुमानं, तत्कल्पने त्वप्रामाणिकं गौरवमित्यसंविदितव्याप्त्यादिकल्पना स्यात् । सम्बन्धस्य बोधकत्वं तावत् लक्षणास्थले ऽभिमतमेवेतीहापि स एवाज्ञातो बोधयतीति लाघवम् । तत्कल्पने त्वप्रामाणिकं गौरवमित्यावेदितमनन्तरमेवाधःस्तात् । प्रयोजनस्थले च गङ्गाधर्मस्य तटे बाधादपि नानुमितिः । न च प्रतीयमानेष्वेकमवच्छेदकं, येन रूपेण व्यापकभानं भवेत् । न च तावता विशेषाणामेकदाऽनुसन्धानसम्भवः, येन समूहालम्बनानुमितिः स्यात् । व्यञ्जनायां पुनरनिश्चितविशेषाणामनेकेषां पानकरसन्यायेन प्रतीतिरिति नानुपपत्तिः । एतेनार्थपत्तिरपि प्रत्युक्ता । तस्या अपि प्राक्सिद्धव्याप्तिच्छायोपजीवनेन प्रवृत्तिः । यथा यो जीवन् स कुत्राऽप्यवतिष्ठते जीवति च गृहे विद्यमानश्चैत्र इति ।

श्रीपादस्तु 'भम धम्मिअ' इत्यादौ भित्तुं प्रत्येवं वदन्त्याः प्रतिवेशिनं प्रति निःशङ्कताभिधानं स्फुरति । किञ्च गोदाकुञ्जस्य रतस्थानत्वं व्यज्यते । सिंहस्थानत्वबुद्ध्या परेण गन्तव्यमेव न । सिंहस्तु वस्तुगत्या नास्त्येव। तदेतद्व्यञ्जनां विना लब्धव्यमिति शङ्कैव नास्तीत्याह ।

संस्कारजन्यत्वाद्रसादिधीः स्मृतिरिति केचित् । तदनुभवविरोधादुपेक्षणीयम् । वयं तु वर्णतद्गतसौकुमार्यादिविशेषरचनाविशेषचेष्टादीनां व्यञ्जनयैव तावदर्थविशेषबोधकत्वं

वाच्यं, सर्वत्रानुमानासंभवात् । तथा च सिद्धे ऽतिरिक्ते व्यापारे शब्दादप्यर्थविशेषप्रतीतिर्लक्षणादिप्रयोज्यप्रतीतिविलक्षणा तत्प्रयोज्यैव भवितुमर्हति कदाचित् पुनर्लक्षणादिकमाप्यास्तां का नः क्षतिः । सर्वथा विलक्षणप्रतीत्युपपादनायातिरिक्तवृत्तिस्वीकार इति निर्गलितोर्थइति ब्रूमः । विस्तरेण चेयं वृत्तिरस्माभिरलंकाररहस्ये प्रसाधितेत्युपरम्यत इति शिवम् ॥

श्रीमत्पुरारिपुटभेदनवासपूतः
श्रीरामचन्द्रपदसाररुचञ्चरीकः ।
श्रीविश्वनाथविबुधप्रतिपन्नविद्यः
श्रीमान् प्रभाकर इमं व्यतनोत् प्रबन्धम् ॥ १ ॥

भवतु कृतिरियं विदेहपुत्री-
परिवृढपादसरोजयोर्मदीया ॥
कठिनविपिनभूमिरेणुखेद-
क्षपणपटुः सरसामृतोर्मिधारा ॥ २ ॥

व्योमाकूपारभूमीश १६४०
गणिते खरवत्सरे ।
एकोनविंशवर्षेण
प्रबन्धोऽयं कृतो मया ॥ ३ ॥

दोषापहाररुचिरो विमलो रससञ्चितः कोपि ।
विलसतु रसप्रदीपो यावत्कल्पं जगत्त्रितये ॥ ४ ॥ ६ ॥

इति श्रीमद्बिन्दुवृन्दारकवन्दनीयपादारविन्दद्वन्द्व भूसुरपुरन्दर
जगद्गुरु महामहोपाध्याय भट्टमाधवतनुज भट्टभट्टारक
भट्टप्रभाकरोन्नीते रसप्रदीपे व्यञ्जनानिरूपणो
नाम तृतीयालोकः समाप्तः ॥ ३ ॥

---

समाप्तोऽयं रसप्रदीपः ।

# THE PRINCESS OF WALES SARASVATI BHAVANA TEXTS.

Edited by

GOPINATH KAVIRAJ, M. A.

No. 1—The Kiraṇāvalī Bhāskara, a Commentary on Udayana's Kiraṇāvalī, Dravya section, by Padmanābha Miśra. Edited with Introduction and Index by Gopinātha Kavirāj, M. A.

No. 2—The Advaita Chintāmaṇi, by Rangoji Bhaṭṭa, Ed. with Introduction etc. by Nārāyaṇa Śāstrī Khiste Sāhityāchārya.

No. 3—The Vedānta Kalpalatikā, by Madhusūdana Sarasvatī. Ed. with Introduction etc. by Rāmājñā Pāṇḍeya Vyākaraṇāchārya.

No. 4—The Kusumāñjali Bodhanī, a Commentary on Udayana's Theistic Tract, Nyāya Kusumāñjali, by Varadarāja. Ed. with Introduction etc. by Gopināth Kavirāj, M. A.

No. 5—The Rasasāra, a Commentary on Udayana's Kiraṇāvalī, Guṇa Section, by Bhaṭṭa Vādīndra. Ed. with Introduction etc. by Gopīnāth Kavirāj, M. A.

No. 6 (Part I)—The Bhāvanā Viveka by Maṇḍana Miśra, with a Commentary by Bhaṭṭa Umbeka. Ed with Introduction etc. by M. M. Gangānātha Jhā, M. A., D. Litt.

No 6 (Part II)—Ditto Ditto

No. 7 ( Part I )—Yoginīhṛdaya dīpikā, by Amṛtānanda Nātha, being a Commentary on Yoginīhṛdaya, a part of Vāmakeśvara Tantra. Ed. with Introduction etc. by Gopīnāth Kavirāj, M.A.

No. 7—(Part II) Ditto Ditto

No. 8—The Kāvyaḍākinī, by Gaṅgānanda Kavīndra. Ed. with Introduction etc. by Jagannātha Śāstrī Hoshing Sāhityopādhyāya.

No. 9 (Part I)—The Bhakti Chandrikā, a Commentary on Śāṇḍilya's Bhaktistūras. by Nārāyaṇa Tīrtha. Ed. with a Prefatory Note by Gopināth Kavirāj, M.A.

No. 10(Part I)-The Siddhāntaratna, by Baladeva Vidyābhusaṇa. Ed. with a Prefatory Note by Gopināth Kavirāj, M.A.

No. 11-The Śrī Vidyā Ratna Sūtras, by Gauḍapāda, with a Commentary by Śankarāraṇya.
Ed. with Introduction etc. by Nārāyaṇa Śāstri Khiste Sāhityāchārya.

No. 12-The Rasapradīpa, by Prabhākara Bhaṭṭa.
Ed. with Introduction etc. by Nārāyaṇa Śastrī Khiste Sāhityāchārya.

No. 13-The Siddhasiddānata Sangraha, by Balabhadra.
Ed. with Introduction by Gopināth Kavirāj, M. A.

No. 14-The Triveṇikā, by Āśādhara Bhaṭṭa.
Ed. with Introduction by Baṭukanātha Śarmā Sāhityopādhyāya, M. A. and Jagannātha Śāstrī Hoshing Sāhityopādhyāya.

No. 15-(Part I)-The Tripurārahasya.
Ed. with a Prefatory Note by Gopināth Kavirāj, M.A.

No. 16-The Kāvya Vilāsa, by Chirañjīva Bhaṭṭāchārya.
Ed. with Introduction etc. by Baṭukanātha Śarmā Sāhityopādhyāya, M. A. and Jagannātha Śāstrī Hoshing Sāhityopādhyāya.

No. 17-The Nyāya Kalikā, by Bhaṭṭa Jayanta.
Ed. with Introduction by M. M. Gaṅgānāth Jhā, M. A., D. Litt.

No. 18 (Part I)-The Gorakṣa Siddhānta Saṅgraha.
Ed. with a Prefatory Note by Gopināth Kavirāj, M.A.



## THE PRINCESS OF WALES SARASVATI BHAVANA STUDIES.

Edited by
GOPINATH KAVIRAJ ,M. A.

Vol. I—

(a) Studies in Hindu Law (I): its evolution, by Gaṅgānātha Jhā.

(d) The View point of Nyāya Vaiśeṣika Philosophy, by Gopi nath Kaviraj.

(c) Nirmāṇa Kāya, by Gopināth Kavirāj.

Vol. II—

(a) *Paraśurāma Miśra* ALIAS Vāṇī Rasāla Rāya, by Gopināth Kavirāj.

(b) Index to S'abara's Bhāṣya, by the late Col. G. A. Jacob.

(c) Studies in Hindu Law (2):-its sources, by Gaṅgānātha Jhā.

(d) A New Bhakti Sūtra, by Gopīnāth Kavirāj.

(e) The System of Chakras according to Gorakṣa Nātha, by Gopināth Kavirjā.

(f) Theism in Ancient India, by Gopināth Kavirāj.

(g) Hindu Poetics, by Baṭuka nātha S'armā.

(h) A seventeenth Century Astrolabe, by Padmākara Dvivedi.

(i) Some aspects of Vira S'aiva Philosophy, by Gopināth Kavirāj.

(j) Nyāya Kusumāñjali ( English Translation ), by Gopināth Kavirāj.

(k) The Definition of Poetry, by Nārāyaṇa S'āstrī Khiste.

(l) Sondala Upādhyāya, by Gopināth Kavirāj.

Vol. III—

(a) Index to S'abara's Bhāṣya by the late Col. G.A. Jacob.

(b) Studies in Hindu Law (3) : Judicial Procedure: by Gaṅgā nātha Jhā.

(c) Theism Ancient India, by Gopintāh Kavirāj.

(d) History and Bibliography of Nyāya Viśeṣika Literature, by Gopināth Kavirāj.

(e) Naiṣadha and S'rī Harṣa by Nīlakamala Bhaṭṭāchārya.
(f) Indian Dramaturgy, by P. N. Pāṭaṇakar.

Vol. IV—

(a) Studies In Hindu Law (4) : Judicial Procedure: by Gaṅgānātha Jhā.
(b) History and Bibliography of Nyāya Vaiśeṣika Literature. by Gopināth Kavirāj.
(c) Analysis of the Contents of the Ṛgveda Prātiśākhya, by Maṅgala Deva Sāstrī.
(d) Nārāyaṇa's Gaṇita kaumudī, by Padmākara Dvivedī.
(e) Food and Drink in the Rāmāyanic Age, by Manmatha nātha Roy.
(f) Satkāryavāda: Causality in Sāṅkhya, by Gopintāh Kavirāj.
(g) Discipline by Consequences, by G. L. Sinha.
(h) History of the origin and expansion of the Aryans by A. C. Ganguly.
(i) Punishments in Ancient Indian Schools by G. L. Sinha.

To be had of—

The Superintendent, Government Press,
Allahabad, U.P. (India).